# *धनदा स्तोत्रम्*

अथातः संप्रवच्छामि धनदा स्तोत्रं उत्तमम् ।
यथोक्तं सर्वतन्त्रेषु यदानीं तत् प्रकाशितम् ॥ 1 ॥

नमः सर्वस्वरूपेण नमः कल्याणदायिके ।
महासंपदप्रदा देवि धनदायै नमोस्तुते ॥ 2 ॥

महाभोगप्रदे देवि महाकाम प्रपूरिते ।
महामोक्ष प्रदे देवि धनदायै नमोस्तुते ॥ 3 ॥

ब्रह्मरूपे सदानन्दे सदानन्द स्वरूपिणि ।
द्रुतसिद्धिप्रदे देवि धनदायै नमोस्तुते ॥ 4 ॥

उद्यत्सूर्य प्रकाशाभे उद्यत् आदित्य मण्डले ।
शिवतत्वप्रदे देवि धनदायै नमोस्तुते ॥ 5 ॥

विश्वरूपे विश्वमते विश्वपालनकारिणी ।
महासत्व गुणाक्रान्ते धनदायै नमोस्तुते ॥ 6 ॥

शिवरूपे शिवानन्दे कारणानन्द विग्रहे ।
विश्वसंहाररूपे च धनदायै नमोस्तुते ॥ 7 ॥

पञ्चतत्त्व स्वरूपे च पञ्चाचार सदारते ।
साद्याभीष्टदे देवि धनदायै नमोस्तुते ॥ 8 ॥

इदं स्तोत्रं मया प्रोक्तं साधकाभीष्ट दायकम् ।
यः पठेत् पाठयेत् वापि स लभेत् सकलं फलम् ॥ 9 ॥

त्रिसन्ध्यं यः पठेन्नित्यं स्तोत्रं एतत् समाहितः ।
स सिद्धिं लभते शीघ्रं नात्र कार्या विचारणा ॥ 10 ॥

इदं रहस्यं परमं स्तोत्रं परम दुर्लभम् ।
गोपनीयं प्रयत्नेन स्वयोनिरिव पार्वति ॥ 11 ॥

अप्रकाश्यमिदं देवि गोपनीयं परात्परम् ।
प्रपठेन्नात्र सन्देहो धनवान् जायते अचिरात् ॥ 12 ॥

॥ इति गुप्तसाधन तन्त्रोक्त धनदा स्तोत्रं संपूर्णम् ॥